इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥ १०८ ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १०९ ॥
किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते ।
नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ११० ॥

इति चाणक्यशतकं समाप्तम् ।

प्रति यत्नश्चास्य सूचितम् । शास्त्रज्ञः पाकस्येति भावः । मिष्टपाचकः मधुरपाककर्त्ता शूरः बलवान् कठिनः शक्तदेहश्च यः भवति, स सूपकारः पाचकः उच्यते कथ्यते सुपाचकतया प्रशस्यते इत्यर्थः ॥ १०७ ॥

इङ्गितेति । यः इङ्गितम् आशयः आकारः आकृतिः तयोस्तत्त्वं भावं जानातीति तथोक्तः बलवान् प्रियदर्शनः सदा अप्रमादी अवहितः तथा दक्षः चतुरः भवति, स प्रतीहारः दौवारिकः उच्यते प्रशस्यते ॥ १०८ ॥

यस्येति । यस्य स्वयं स्वत इत्यर्थः प्रज्ञा बुद्धिः नास्ति, तस्य शास्त्रं किं करोति? न किमपीत्यर्थः। लोचनाभ्यां नेत्राभ्यां विहीनस्य अन्धस्येत्यर्थः दर्पणः किं करिष्यति? न किमपीत्यर्थः ॥ १०९ ॥

किमिति । यत्र श्रोता न विद्यते तत्र वक्तारः किं करिष्यन्ति? नैव किमपीत्यर्थः । नग्नाः विवसनाः क्षपणकाः बौद्धसन्न्यासिनः यत्र तादृशे देशे रजकः किं करिष्यति? वस्त्राभावेन तत्क्षालनकार्य्याभावादिति भावः ॥ ११० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्य विरचिता
चाणक्यशतकव्याख्या समाप्ता ।